# ॥ तुलस्युपनिषत् ॥

अथ तुलस्युपनिषदं व्याख्यास्यामः । नारद ऋषिः ।
अथर्वाङ्गिराश्छन्दः । अमृता तुलसी देवता ।
सुधाबीजम् । वसुधा शक्तिः । नारायणः कीलकम् ।
श्यामां श्यामवपुर्धरां ऋक्स्वरूपां यजुर्मनसं ब्रह्माथर्वप्राणां
कल्पहस्तां पुराणपठितां अमृतोद्भवां अमृतरसमञ्जरीं अनन्तां
अनन्तरसभोगदां वैष्णवीं विष्णुवल्लभां मृत्युजन्मनिबर्हिणीं
दर्शनात्पापनाशिनीं स्पर्शनात्पावनीं अभिवन्दनाद् रोगनाशिनीं सेवनात्
मृत्युनाशिनीं वैकुण्ठार्चनात् विपद्धन्त्रीं, भक्षणात् वयुनप्रदां ,
प्रादक्षिण्यात् दारिद्र्यनाशिनीं, मूलमृल्लेपनात् महापापभञ्जिनीं
घ्राणतर्पणात् अन्तर्मलनाशिनीं य एवं वेद स वैष्णवो भवति ।
वृथा न छिन्द्यात् । दृष्ट्वा प्रदक्षिणं कुर्यात् ।
द्वादश्यां न स्पृशेत् । पर्वणि न विचिन्वेत् ।
यदि विचन्वति स विष्णुहा भवति । श्री तुलस्यै स्वाहा ।
विष्णुप्रियायै स्वाहा । अमृतायै स्वाहा ।
श्री तुलस्यै विद्महे विष्णुप्रियायै धीमहि । तन्नो अमृता प्रचोदयात् ।
अमृतेऽमृतरूपाऽसि अमृतत्वप्रदायिनि ।
त्वं मामुद्धर संसारात् क्षीरसागर कन्यके ॥ १
श्रीसखि त्वं सदानन्दे मुकुन्दस्य सदा प्रिये ।
वरदाभयहस्ताभ्यां मां विलोकय दुर्लभे ॥ २
अवृक्षवृक्षरूपाऽसि वृक्षत्चं मे विनाशय ।
तुलस्यतुलरूपाऽसि तुलाकोटिनिभेऽजरे ॥। ३
अतुले त्वत्तुलायां हि हरिरेकोऽस्ति नान्यथा ।
त्वमेव जगतां धात्री त्वमेव विष्णुवल्लभा ॥ ४
त्वमेव सुरसंसेव्या त्वमेव मोक्षदायिनी ।
त्वच्छायायां वसेल्लक्ष्मीः त्चन्मूले विष्णुरव्ययः ।
समन्ताद् देवताः सर्वाः सिद्धचारणपन्नगाः ॥ ५
यन्मूले सर्वतीर्थानि यन्मध्ये ब्रह्म देवताः ।
यदग्रे वेदशास्राणि तुलसीं तां नमाम्यहम् ॥ ६
तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे ।
नमस्ते नारदनुते नारायणमनः प्रिये ॥ ७
ब्रह्मानन्दाश्रुसञ्जाते वृन्दावननिवासिनि ।
सर्वावयसम्पूर्णे अमृतोपनिषद्रसे ॥ ८
त्वं मामुद्धर कल्याणि महापापाब्धिदुस्तरात् ।
सर्वेषामपि पापानां प्रायश्चित्तं त्वमेव हि ॥

देवानां च ऋषीणां च पितॄणां त्वं सदा प्रिया ॥ ९

विना श्रीतुलसीं विप्रा येऽपि श्राद्धं प्रकुर्वते ।
वृथा भवति तच्छ्राद्धं पितॄणां नोपगच्छति ॥। १०
तुलसीपत्रमुत्सृज्य यदि पूजां करोति वै ।
आसुरी सा भवेत्पूजा विष्णुप्रीतिकरी न च ॥ ११
यज्ञं दानं जपं तीर्थं श्राद्धं वै देवतार्चनम् ।
तर्पणं मार्जनं चान्यन्न कुर्यात् तुलसीं विना ॥ १२
तुलसीदारुमणिभिर्जपः सर्वार्थसाधकः ।
एवं न वेद यः कश्चित् स विप्रः श्वपचाधमः ॥ १३
इत्याह भगवान् ब्रह्माणं नारायणः ,ब्रह्मा नारदसनकादिभ्यः,
सनकादयो वेदव्यासाय, वेदव्यासः शुकाय, शुको वामदेवाय, वामदेवो
मुनिभ्यः , मुनयो मनुभ्यः प्रोचुः ।
य एवं वेद, स स्रीहत्यायाः प्रमुच्यते, स वीरहत्यायाः प्रमुच्यते,
स ब्रह्महत्यायाः प्रमुच्यते, स महाभयात्
प्रमुच्यते, स महादुःखात्प्रमुच्यते, देहान्ते वैकुण्ठमवाप्नोति
वैकुण्ठमवाप्नोति । इत्युपनिषत् ।